"मुञ्चाङ्गं ग्लपयस्यलं क्षिप कुतोऽप्यक्षाणि विद्भात्यदो,
दूरे धेहि न हृष्य एव (च) जितभ्रान्त्या न वेत्सि क्षणम् ।
स्थेयं चेद्धि निरुन्धि गामिति तवोद्योगे द्विषः स्त्री क्षिप—
त्याश्लेषक्रमुकाङ्गरागललितालापैर्विधित्सू रतिम् ॥"

अपिच—'रम्यं हर्म्यं चन्दनं चन्द्रपादा, वेणुर्वीणा यौवनस्था युवत्यः ।
नैते रम्या क्षुत्पिपासार्दितानां, सर्वारम्भास्तन्दुलप्रस्थमूलाः ॥"

तथा—'आतपे धृतिमता सह वध्वा यामिनीविरहिणा विहगेन ।
सेहिरे न किरणा हिमरश्मेर्दुःखिते (खिन्ने) मनसि सर्वमसह्यम् ॥"

इत्यादि, अतो ज्ञायते ऐन्द्रियकं सुखं वासनामात्रमेव, नाऽऽत्मनः स्वाभाविकानाकुलत्वस्वभावं । कथमन्यथा लोके सुखजनकत्वेन प्रतीतानां अपि भावानां दुःखहेतुत्वं । एवं दुःखमपि ॥

एते सुखदुःखे खलु वासनामात्रे कथं न लक्ष्येते इति — अत्राह पुनः शिष्यः खल्विति वाक्यालंकारे निश्चये वा । कथं ? केन प्रकारेण न लक्ष्येते न संवेद्येते लोकैरिति शेषः । शेषं स्पष्टम् ।

अत्राचार्यः प्रबोधयतिः—

**मोहेन संवृतं ज्ञानं स्वभावं लभते न हि ।**
**मत्तः पुमान्पदार्थानां यथा मदनकोद्रवैः ॥७॥**

टीका—नहि-नैव लभते-परिच्छिनत्ति धातूनामनेकार्थत्वात् लभेर्ज्ञानेऽपि वृत्तिस्तथा चल्लोके वक्तिं-मयाऽस्य चित्तं लब्धमिति । किं तत् कर्तृ ? ज्ञानं धर्म-धर्मिणोः कथंचित्तादात्म्यादर्थग्रहणव्यापारपरिणत आत्मा । कं ? स्वभावं, स्वोऽसाधारणो—अन्योऽन्यव्यतिकरे सत्यपि व्यक्त्यंतरेभ्यो विवक्षितार्थस्य व्यावृत्तिप्रत्ययहेतुर्भावो धर्मः स्वभावस्तं । केषां ? पदार्थानां । सुखदुःखशरीरादीनां । किंविशिष्टं सत् ज्ञानं ? संवृतं प्रच्छादितं वस्तुयाथात्म्यप्रकाशने अभिभूतसामर्थ्यं । केन ? मोहेन—मोहनीयकर्मणो विपाकेन ।

तथाचोक्तम् [लघीयस्त्रये]—

मलविद्धमणेर्व्यक्तिर्यथानैकप्रकारतः ।
कर्म्मविद्धात्मविज्ञप्तिस्तथानैकप्रकारतः ॥

नन्वमूर्तस्यात्मनः कथं मूर्तेन कर्म्मणाभिभवो युक्तः ? इत्यत्राह—**मत्त** इत्यादि । यथा नैव लभते । कोऽसौ ? **पुमान्** व्यवहारी पुरुषः । कं ? स्वभावं केषां ? पदार्थानां घटपटादीनां । किं विशिष्टः सन् ? **मत्तः** जनितमदः । कैः ? **मदनकोद्रवैः** ॥७॥

'**स्वभावमनासादयन् विसदृशान्यवगच्छतीति**'—पुनराचार्य एव प्राह—विराधक इत्यादि यावत् **स्वभावं** शरीरादीनां स्वरूपं **अनासादयन्** अलभमानः पुरुषः **विसदृशानि** शरीरादीनि अन्यथाभूतानि **अवगच्छति** प्रतिपद्यत इत्यर्थः ।

अमुमेवार्थं स्फुटयति—

**वपुर्गृहं धनं दाराः पुत्रा मित्राणि शत्रवः ।**
**सर्वथान्यस्वभावानि मूढः स्वानि प्रपद्यते ॥८॥**

टीका—प्रपद्यते । कोऽसौ ? **मूढः** स्वपरविवेकज्ञानहीनः पुमान् । कानि, वपुर्गृहादीनि वस्तूनि । किं विशिष्टानि ? स्वानि स्वश्चात्मा स्वानि चात्मीयानि स्वानि एकशेषाश्रयणादेकस्य स्वशब्दस्य लोपः । अयमर्थः दृढतममोहाविष्टो देहादिकमात्मानं प्रपद्यते—आत्मत्वेनाभ्युपगच्छति । दृढतरमोहाविष्टश्च आत्मीयत्वेन । किंविशिष्टानि संति स्वानि प्रपद्यत इत्याह—**सर्वथान्यस्वभावानि**—सर्वेण द्रव्य-क्षेत्र-काल-भाव-लक्षणेन प्रकारेण स्वस्वभावादन्यो भिन्नः स्वभावो येषां तानि । किं किं इत्याह—**वपुः** शरीरं तावदचेतनत्वादिस्वभावं प्रसिद्धमस्ति । एवं **गृहं धनं दाराः** भार्याः **पुत्राः** आत्मजाः **मित्राणि** सुहृदः **शत्रवः** अमित्राः ॥८॥

**अत्र** हितवर्गमुद्दिश्य दृष्टान्तः ।'—**अत्र** एतेषु वपुरादिषु मध्ये **हितवर्गं** हितानामुपकारकाणां दारादीनां वर्गो गणस्तं उद्दिश्य विषयीकृत्य **दृष्टान्तः** उदाहरणं प्रदर्श्यते, अस्माभिरिति शेषः । तद्यथा:—

**दिग्देशेभ्यः खगा एत्य संवसंति नगे नगे ।**
**स्वस्वकार्यवशाद्यांति देशे दिक्षु प्रगे प्रगे ॥९॥**

टीका—**संवसंति** मिलित्वा रात्रिं यावन्निवासं कुर्वन्ति के ते ? **खगाः** पक्षिणः । क्व क्व ? **नगे नगे** वृक्षे वृक्षे । किं कृत्वा ? **एत्य** आगत्य । केभ्यो ? **दिग्देशेभ्यः**—दिशः पूर्वादयो दिशं । देशस्तस्थैकदेशो(शा) अंगवंगादयस्तेभ्यो ऽवधिकृतेभ्यः तथा **यांति** गच्छन्ति । के ते ? खगाः । कासु ? **दिक्षु** दिग्देशेषु इति प्राप्तेर्विपर्ययनिर्देशो गमननियमनिवृत्त्यर्थं तेन यो यस्या दिशिगच्छति यश्च यस्माद्देशादायातः स तस्मिन्नेवदेशे गच्छतीति नास्ति नियमः । किं तर्हि यत्र क्वापि यथेच्छं गच्छंतीत्यर्थः । कस्मात् **स्वस्वकार्यवशात्** निजनिजकरणीयपारतंत्र्यात् । कदा कदा ? **प्रगे प्रगे** प्रातः प्रातः । एवं संसारिणो जीवा अपि नरकादिगतिस्थानेभ्य आगत्य कुले स्वायुः कालं यावत् संभूय तिष्ठंति तथा निजनिज(कर्म) पारतंत्र्यात् देवगत्यादिस्थानेष्वनियमेन स्वायुः कालान्ते गच्छन्ति इति प्रतीहि । कथं भद्र ! तव दारादिषु हितबुद्ध्या गृहीतेषु सर्वथान्यस्वभावेषु आत्मीयभावः ? यदि खलु एते त्वदात्मका स्युः तदा त्वयि तदवस्थयैव कथमवस्थान्तरं गच्छेयुः । यदि चैते तावकाः स्युस्तर्हि कथं ? तवप्रयोगमंतरेणैव यत्र क्वापि प्रयांतीति मोहग्रहावेशमपमार्य यथावत्पश्येति दार्ष्टान्ते दर्शनीयं ॥९॥

'अहितवर्गेऽपि दृष्टान्तः प्रदर्श्यते' अस्माभिरिति योज्यम्:—

**विराधकः कथं हंत्रे जनाय परिकुप्यति ।**
**त्र्यगुलं पातयन्पद्भ्यां स्वयं दंडेन पात्यते ॥१०॥**

टीका—कथमित्यरुचौ, न श्रद्दधे । कथं **परिकुप्यति** समंतात् क्रुध्यति । कोऽसौ ? **विराधकः** अपकारकर्त्ता जनः । कस्मै ? **हंत्रे जनाय** प्रत्यपकारकाय लोकाय ।

'सुखं वा यदि वा दुःखं येन यच्च कृतं भुवि ।
अवाप्नोति स तत्तस्मादेष मार्गः सुनिश्चितः ॥"

इत्यभिधानात् अन्याय्यमेतदिति भावः। अत्र दृष्टान्तमाचष्टे-**त्र्यंगुल-**इत्यादिः—**पात्यते भूमौ** क्षिप्यते। कोऽसौ? यः कश्चिदसमीक्ष्यकारी जनः केन, **दंडेन** हस्तधार्यकाष्ठेन। कथं पात्यते? स्वयं—प्रेरणमंतरेणैव पात्यते। किं कुर्वन्? **पातयन्**—भूमिं प्रति नामयन्। किं तत्? त्र्यंगुलं अंगुलित्रयाकारं कच्चराद्याकर्षणावयत्रं। काभ्यां? **पद्भ्यां** पादाभ्यां, ततोऽहिते प्रीतिर्हिते चाऽप्रीतिः स्वहितैषिणा प्रेक्षावता न करणीया।

**हिताहितयोः रागद्वेषौ कुर्वन्**—अत्र विनेयः पृच्छति—**हिताहितयो राग-द्वेषौ कुर्वन किं कुरुते?** दारादिषु रागं शत्रुषु च द्वेषं कुर्वाणः किं कुरुते आत्मने, हितं कार्यं कुरुते येन तावत् कार्यतयोपदिश्यते इत्यर्थः। अत्राऽऽचार्यः समाधत्ते—

**रागद्वेषद्वयीदीर्घनेत्राऽऽकर्षणकर्मणा।**
**अज्ञानात्सुचिरं जीवः संसाराब्धौ भ्रमत्यसौ ॥११॥**

टीका—भ्रमति संसरति। कोः? **असौ जीवश्चेतनः।** क्व? **संसाराब्धौ**—संसारः द्रव्यादिपरिवर्तनरूपो भवोऽब्धिः समुद्रइव दुःखहेतुत्वात् दुस्तरत्वाच्च तस्मिन्। कस्मात्? **अज्ञानात्** देहादिष्वात्मविभ्रमात्। कियत्कालं? **सुचिरं** अतिदीर्घकालं। केन? **रागद्वेषद्वयी दीर्घनेत्राऽऽकर्षणकर्मणा**—रागः इष्टे वस्तुनि प्रीतिः द्वेषश्चानिष्टेऽप्रीतिस्तयोर्द्वयी—रागद्वेषयोः शक्तिव्यक्तिरूपतया युगपत् प्रवृत्ति ज्ञापनार्थं द्वयी ग्रहणं, शेषदोषाणां च तद्द्वयप्रतिबद्धत्वबोधनार्थं। तथा चोक्तम् [ज्ञानार्णवे]—

'यत्र रागः पदं धत्ते द्वेषस्तत्रेति निश्चयः।
उभावेतौ समालम्ब्य विक्रमत्यधिकं मनः २३-२५ ॥'

अपि च—आत्मनि सति परसंज्ञा, स्व-पर-विभागात् परिग्रहद्वेषौ।
अनयोः संप्रतिबद्धाः सर्वे दोषाश्च जायंते ॥

सा दीर्घनेत्रं आयतमंथाकर्षणपाश इव भ्रमणहेतुत्वात्तस्याकर्षणकर्म-जीवस्य रागादिरूपतया परिणमनं नेत्रस्याकर्षणत्वाभिमुखाऽऽनयनं तेन। अत्रोप-मानभूतो मंथदंड आक्षेप्यस्तेन यथा—नेत्राकर्षणव्यापारे मंथाचलः समुद्रे सुचिरं भ्रांतो लोके प्रसिद्धस्तथा स्वपरविवेकानवबोधात्। यद्वद्भूतेन रागादिपरिणामेन

कारणे कार्योपचारात्तज्जनितकर्मबन्धेन संसारस्थो जीवो अनादिकालं संसारे भ्रांतो भ्रमति भ्रमिष्यति इति । भ्रमतीति इति "अत्र तिष्ठंते पर्वता" इत्यादिवत् नित्यप्रवृत्ते लटो विधानात् । उक्तं च—[पंचत्थिपाहुडे]—

'जो खलु संसारत्थो जीवो तत्तो दु होदि परिणामो ।
परिणामादो कम्मं कम्मादो हवदि गदि-सु-गदी ॥१२८॥
गदिमधिगदस्य देहो देहादो इंदियाणि जायंति ।
तेहिं दु विसयग्गहणं तत्तो रागो व दोसो वा ॥१२९॥
जायदि जीवस्सेवं भावो संसारचक्कवालम्मि ।
इदि जिणवरेहिं भणियं अणाइणिहणो सणिहणो वा ॥१३०॥'

'तस्मिन्नपि यदि सुखी स्यात् को दोष ? इति'—अथ प्रतिपाद्यः पर्यनुयुङ्क्ते भगवन् ! तस्मिन्नपि संसारेपि न केवलं मोक्षे इत्यपि शब्दार्थः । यदि चेत्जीवः सुखी सुखयुक्तो भवेत् तर्हि को दोषः ? न कश्चित् दोषो ? दोषः दुष्टत्वं, संसारस्य सर्वेषां सुखस्यैवाप्तुमिष्टत्वात्; येन संसारच्छेदाय सन्तो यतेरन् इति अत्राऽऽह ।

**विपद्भवपदाऽऽवर्ते पदिकेवातिवाह्यते ।**
**यावत्तावद्भवंत्यन्याः प्रचुरा विपदः पुरः ॥१२॥**

टीका—वत्स ! यावत् अतिवाह्यते अतिक्रम्यते; प्रेर्यते, काऽसौ ? विपत् सहजशरीरमानसाऽऽगंतुकानामापदां मध्ये या काऽप्येका विवक्षिता आपत् । जीवेनेति शेषः । क्व ? भवपदाऽऽवर्ते भवः संसारः पदावर्तइव—पादचाल्यघटीयंत्रमिव—भूयो भूयः परिवर्तमानत्वात् । तस्मिन् क, इव ? पदिकाइव—पादाऽऽक्रांतदंडिका यथा तावद्भवंति । काः ? अन्याः अपूर्वा प्रचुरा—बह्व्यो विपदः आपदः पुरः अग्रे जीवस्य, पदिकेव, काछिकस्येति सामर्थ्याद्व्याख्या । अतो जानीहि दुःखैकनिबंधनविपत्तिनिरंतरत्वात् संसारस्य अवश्यविनाशित्वम् ॥१२॥

'न सर्वे विपद्वन्तः स-संपदोपि दृश्यंत इति'—पुनः शिष्य एवाह भगवन् ! सर्वे समस्ता अपि संसारिणः विपद्वन्तः विपत्तियुक्ताः न सन्ति ससम्पदोऽपि दृश्यन्ते सश्रीकाणामपि केषांचिद् दृश्यमानत्वात् इति अत्राऽऽह—

**दुरर्ज्येनाऽसुरक्षेण नश्वरेण धनादिना ।**
**स्वस्थंमन्यो जनः कोऽपि ज्वरवानिव सर्पिषा ॥१३॥**

टीका—भवति । कोऽसौ ? **जनः** जीवः लोकः । किंविशिष्टः ? **कोऽपि**—कश्चिदपि सर्वः । किंविशिष्टो भवति ? **स्वस्थंमन्यो** स्वथमात्मानं मन्यमानो अहं सुखीति मन्यत इत्यर्थः । केन कृत्वा ? **धनादिना** द्रव्यकामिन्यादीष्टवस्तुजातेन । किंविशिष्टेन ? **दुरर्ज्येन**—अपायबहुलत्वाद् दुर्ध्यानावेशाच्च दुःखेन महता कष्टेनाऽर्ज्यत इति दुरर्ज्येन—तथा असुरक्षेण दुस्त्राणेन यत्नतो रक्ष्यमाणस्याप्यपायस्यावश्यं भावित्वात् । तथा नश्वरेण अशाश्वतेन रक्ष्यमाणस्यापि विनाशसंभवात् । अत्र दृष्टांतमाह—ज्वरेत्यादि-इव शब्दो यथार्थे इव यथा कोऽपि मुग्धो **ज्वरवान्** अतिशयेन मतेर्विनाशात् सामज्वराऽऽर्तः **सर्पिषा** घृतेन पानाद्युपयुक्तेन, **स्वस्थंमन्यो** भवति—निरामयमात्मानं मन्यते । ततो बुद्ध्यस्व—दुरुपार्ज्य-दूरक्षण-भंगुर-द्रव्यादिना दुःखमेव स्यात् । उक्तं च—

'अर्थस्योपार्ज्जने दुःखमर्जितस्य च रक्षणे ।
आये दुःखं व्यये दुःखं धिगर्थ दुःखभाजनम् ।''

**एवं विधां संपदं कथं न त्यजतीति** ।'—भूयोऽपि विनेयः पृच्छति **एवं विधां** अनेन दुरर्ज्यत्वादिप्रकारेण लोकद्वयोऽपि दुःखदां **सम्पदं** धनादिसंपत्ति **कथं न त्यजति** मुंचति जनः कथमिति विस्मयगर्भे प्रश्ने । अत्रगुरुरुत्तरमाह—

**विपत्तिमात्मनो मूढः परेषामिव नेक्षते ।**
**दह्यमान-मृगाऽऽकीर्णवनांतर-तरुस्थवत् ॥१४॥**

टीका—**नेक्षते** न पश्यति । कोऽसौ ? **मूढ**-धनाद्यासक्त्या लुप्तविवेको लोकः । कां ? **विपत्ति**–चौरादिना क्रियमाणां धनापहाराद्यापदं । कस्य ? **आत्मनः**-स्वस्य । केषामिव ? **परेषामिव**, यथा इमे विपदा आक्रम्यन्ते तथाऽहमपि आक्रतव्य इति न विवेचयतीत्यर्थः । क इव ? **दह्यमान-मृगाकीर्ण-वनान्तर-तरुस्थवत्** दह्यमानैः दावानलज्वालादिभिर्भस्मीक्रियमाणैर्मृगैर्हरिणादिभिराकीर्णस्य संकुलस्य वनस्यांतरे मध्ये वर्तमान । तरु वृक्षमारूढो जनो यथा, आत्मनो मृगाणामिव विपत्ति न पश्यति ॥१४॥

कुत एतदिति ? लोभादिति—पुनराह शिष्यः भगवन् ! कुत कस्माद्धेतो एतत् इदं सन्निहिताया अपि विपदोऽदर्शनं जनस्य इति ? गुरुराह वत्स ! लोभादिति, धनादिगार्ध्यात् पुरोवर्तिनीमप्यापदं धनिनो न पश्यंति इति। यतः—

**आयुर्वृद्धिक्षयोत्कर्षहेतुं कालस्य निर्गमं।**
**वांछतां धनिनामिष्टं जीवितात्सुतरां धनम् ॥१५॥**

टीका—वर्तते। किं तत् ? **धनं**। किंविशिष्टं ? **इष्टं** अभिमतं। कथं ? **सुतरां** अतिशयेन कस्मात् ? **जीवितात्** प्राणेभ्यः। केषां ? **धनिनां** किं कुर्वतां ? **वांछतां**। कं ? **निर्गमं** अतिशयेन गमनं। कस्य ? **कालस्य**। किंविशिष्टं ? **आयुर्वृद्धिक्षयोत्कर्षहेतुं** आयुः क्षयस्य वृद्ध्युत्कर्षस्य च कालांतरवर्द्धनस्य कारणं अयमर्थः—धनिनां तथा जीवितव्यं नेष्टं यथा धनं। कथमन्यथा जीवितक्षयकारणमपि धनवृद्धिहेतुं कालनिर्गमं वांछंति। अतो 'धिग्धनम्' एवंविधव्यामोहहेतुत्वात्।

**धनं कथं निंद्यं ? येन पुण्यमुपार्ज्यते इति'**—अत्राह शिष्यः। पात्रदानदेवार्चनादिक्रियायाः पुण्यहेतोर्धनं विना असंभवात्, पुण्यसाधनं धनं कथं निंद्यं ? किं तर्हि प्रशस्यमेव अतो **येन** धनेन यथा कथचिद्धनमुपार्ज्य पात्रादौ च नियुज्य सुखाय पुण्यमुपार्जनीयं इति अत्राह—

**त्यागाय श्रेयसे वित्तमवित्तः संचिनोति यः।**
**स्वशरीरं स पंकेन स्नास्यामीति विलिम्पति ॥१६॥**

टीका—यः अवित्तः, निर्धनः सन् **संचिनोति** सेवाकृष्यादिकर्मणोपार्जयति। किं तत् ? **वित्तं**-धनं। कस्मै ? **त्यागाय** पात्रदानदेवपूजाद्यर्थं त्यागायेत्यस्य देवपूजाद्युपलक्षणार्थत्वात्। कस्मै त्यागः ? **श्रेयसे** अपूर्वपुण्याय पूर्वोपात्तपापक्षयाय। यस्य तु चक्रवर्त्यादेरिवायत्नेन धनं सिद्ध्यति स तेन श्रेयोऽर्थं पात्रदानादिकमपि करोतु इति भावः। स किं करोति इत्याह **विलिंपति** विलेपनं करोति। कोऽसौ ? सः, किं तत् ? **स्वशरीरं**। केन ? **पङ्केन**-कर्दमेन। कथं कृत्वा इत्याह **स्नास्यामीति**। अयमर्थः, यथा कश्चिन्निर्मलमङ्गं स्नानं करिष्यामीति पंकेन

**दुरर्ज्येनाऽसुरक्षेण नश्वरेण धनादिना ।**
**स्वस्थंमन्यो जनः कोऽपि ज्वरवानिव सर्पिषा ॥१३॥**

टीका—भवति । कोऽसौ ? जनः जीवः लोकः । किंविशिष्टः ? कोऽपि—कश्चिदपि सर्वः । किंविशिष्टो भवति ? **स्वस्थंमन्यो** स्वथमात्मानं मन्यमानो अहं सुखीति मन्यत इत्यर्थः । केन कृत्वा ? **धनादिना** द्रव्यकामिन्यादीष्टवस्तुजातेन । किंविशिष्टेन ? **दुरर्ज्येन**—अपायबहुलत्वाद् दुर्ध्यानावेशाच्च दुःखेन महता कष्टेनाऽर्ज्यत इति दुरर्ज्येन—तथा असुरक्षेण दुस्त्राणेन यत्नतो रक्ष्यमाणस्याप्यपायस्यावश्यं भावित्वात् । तथा नश्वरेण अशाश्वतेन रक्ष्यमाणस्यापि विनाशसंभवात् । अत्र दृष्टांतमाह—ज्वरेत्यादि·इव शब्दो यथार्थे इव यथा कोऽपि मुग्धो **ज्वरवान्** अतिशयेन मतेर्विनाशात् सामज्वराऽऽर्तः **सर्पिषा** घृतेन पानाद्युपयुक्तेन, **स्वस्थंमन्यो** भवति—निरामयमात्मानं मन्यते । ततो बुद्ध्यस्व—दुरुपार्ज्य-दूरक्षण-भंगुर-द्रव्यादिना दुःखमेव स्यात् । उक्तं च—

'अर्थस्योपार्ज्जने दुःखमर्जितस्य च रक्षणे ।
आये दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ।"

**एवं विधां संपदं कथं न त्यजतीति ।**'—भूयोऽपि विनेयः पृच्छति एवं विधां अनेन दुरर्ज्यत्वादिप्रकारेण लोकद्वयोऽपि दुःखदां **सम्पदं** धनादिसंपत्ति **कथं न त्यजति** मुंचति जनः कथमिति विस्मयगर्भे प्रश्ने । अत्रगुरुरुत्तरमाह—

**विपत्तिमात्मनो मूढः परेषामिव नेक्षते ।**
**दह्यमान-मृगाऽऽकीर्णवनांतर-तरुस्थवत् ॥१४॥**

टीका—**नेक्षते** न पश्यति । कोऽसौ ? **मूढः**-धनाद्यासक्त्या लुप्तविवेको लोकः । कां ? **विपत्ति**—चौरादिना क्रियमाणां धनापहाराद्यापदं । कस्य ? **आत्मनः**-स्वस्य । केषामिव ? **परेषामिव**, यथा इमे विपदा आक्रम्यन्ते तथाऽहमपि आक्रंतव्य इति न विवेचयतीत्यर्थः । क इव ? **दह्यमान-मृगाकीर्ण-वनान्तर-तरुस्थवत्** दह्यमानैः दावानलज्वालादिभिर्भस्मीक्रियमाणैर्मृगैर्हरिणादिभिराकीर्णस्य संकुलस्य वनस्यांतरे मध्ये वर्तमानं । तरुं वृक्षमारूढो जनो यथा, आत्मनो मृगाणामिव विपत्ति न पश्यति ॥१४॥

कुत एतदिति ? लोभादिति—पुनराह शिष्यः भगवन् ! कुत कस्माद्धेतो एतत् इदं सन्निहिताया अपि विपदोऽदर्शनं जनस्य इति ? गुरुराह वत्स ! लोभादिति, धनादिगार्ध्यात् पुरोवर्तिनीमप्यापदं धनिनो न पश्यंति इति। यतः—

**आयुर्वृद्धिक्षयोत्कर्षहेतुं कालस्य निर्गमं।**
**वांछतां धनिनामिष्टं जीवितात्सुतरां धनम् ॥१५॥**

टीका—वर्तते। किं तत् ? धनं। किंविशिष्टं ? इष्टं अभिमतं। कथं ? **सुतरां** अतिशयेन कस्मात् ? **जीवितात्** प्राणेभ्यः। केषां ? **धनिनां** किं कुर्वतां ? **वांछतां**। कं ? **निर्गमं** अतिशयेन गमनं। कस्य ? **कालस्य**। किंविशिष्टं ? **आयुर्वृद्धिक्षयोत्कर्षहेतुं** आयुः क्षयस्य वृद्ध्युत्कर्षस्य च कालांतरवर्द्धनस्य कारणं अयमर्थः–धनिनां तथा जीवितव्यं नेष्टं यथा धनं। कथमन्यथा जीवितक्षयकारणमपि धनवृद्धिहेतुं कालनिर्गमं वांछंति। अतो 'धिग्धनम्' एवंविधव्यामोहहेतुत्वात्।

धनं कथं निंद्यं ? येन पुण्यमुपार्ज्यते इति'—अत्राह शिष्यः। पात्रदानदेवार्चनादिक्रियायाः पुण्यहेतोर्धनं विना असंभवात्, पुण्यसाधनं धनं कथं निंद्यं ? किं तर्हि प्रशस्यमेव अतो येन धनेन यथा कथचिद्धनमुपार्ज्य पात्रादौ च नियुज्य सुखाय पुण्यमुपार्जनीयं इति अत्राह—

**त्यागाय श्रेयसे वित्तमवित्तः संचिनोति यः।**
**स्वशरीरं स पंकेन स्नास्यामीति विलिम्पति ॥१६॥**

टीका—यः अवित्तः, निर्धनः सन् संचिनोति सेवाकृष्यादिकर्मणोपार्जयति। किं तत् ? वित्तं-धनं। कस्मै ? त्यागाय पात्रदानदेवपूजाद्यर्थं त्यागायेत्यस्य देवपूजाद्युपलक्षणार्थत्वात्। कस्मै त्यागः ? श्रेयसे अपूर्वपुण्याय पूर्वोपात्तपापक्षयाय। यस्य तु चक्रवर्त्यादेरिवायत्नेन धनं सिद्ध्यति स तेन श्रेयोऽर्थं पात्रदानादिकमपि करोतु इति भावः। स किं करोति इत्याह विलिंपति विलेपनं करोति।

विलिपन् असीक्ष्यकारी तथा पापेन धनुमुपार्ज्य पात्रदानादिपुण्येन पापं क्षपयिष्या मीति धनार्जने प्रवर्तमानोऽपि । न च शुद्धवृत्त्या कस्यापि धनार्जनं संभवति

तथा चोक्तम् [आत्मानुशासने]—

"शुद्धैर्धनैर्विवर्धन्ते सतामपि न संपदः ।
नहि स्वच्छांबुभिः पूर्णाः कदाचिदपि सिंधवः ॥"

'**भोगोपभोगायस्यादिति तदपि नेति यतः**'—पुनराह शिष्यः भगवन् ! यद्येवं धनार्जनस्य पापप्रायतया दुःखहेतुर्वा धनं निद्यं, तर्हि धनं विना सुखहेतो र्भोगोपभोगस्यासंभवात् तदर्थं धनं **स्यादिति** प्रशस्यं भविष्यतीति । **भोगो भोगाय** भोगो-भोजनताम्बूलादिः । उपभोगो-वास्तुकामिन्यादिः । भोगाश्चोप भोगाश्च भोगोपभोगं तस्मै । **तदपि नेतियत् न तदपि** केवलं पुण्यहेतुतया धं प्रशस्यमिति यत्त्वयोक्तं तदुक्तरीत्या न स्यात् । किं तर्हि ? भोगोपभोगार्थं तत्सा धनं प्रशस्यमिति यत्त्वया संप्रति उच्यते तदपि न स्यात् । कुत इति चेत्, यतः

**आरंभे तापकान्प्राप्तावतृप्तिप्रतिपादकान् ।**
**अंते सुदुस्त्यजान कामं* कामान् कः सेवते सुधीः ॥१७॥**

टीका—कः, न कश्चित् सुधीः विद्वान् सेवते इंद्रियप्रणालिकयाऽनुभवति कान् ? भोगोपभोगान् । उक्तं च—

"तदात्वसुखसंज्ञेषु भावेष्वज्ञोऽनुरज्यते ।
हितमेवानुरुध्यंते प्रपरीक्ष्य परीक्षकाः ॥"

कथं भूतान्, **कामान् तापकान्** देहेंद्रियमनः क्लेशहेतून् । क्व ? आरंभे उत्पत्त्युपक्रमे । अन्नादिभोग्यद्रव्य-संपादनस्य कृष्यादिक्लेशबहुलतया सर्वजनसु प्रसिद्धत्वात् । तर्हि किं भुज्यमानाः कामाः संभूतिसेव्यास्ते इति अत्राह । प्राप्तं इन्द्रियेण सम्बन्धे सति **अतृप्ति प्रतिपादकान्** अतृप्तेः सुतृष्णायाः प्रतिपादकान् दायकान् । उक्तं च [ज्ञानार्णवे]—

"अपि संकल्पिताः कामाः संभवंति यथा यथा ।
तथा तथा मनुष्याणां तृष्णा विश्वं विसर्पति ॥"२०-३०

---

* कामान् काम इति पाठः ।

तर्हि यथेष्टं भुक्त्वातृप्तेषु तेषु तृष्णासंतापः शाम्यतीति सेव्यास्ते इत्याह । अंते सुदुस्त्यजान् भुक्तिप्रांते त्यक्तुमशक्यान् । सुभक्तेष्वपि तेषु मनोव्यतिपङ्गस्य दुर्निवारत्वात् । उक्तं च [चन्द्रप्रभचरिते]—

"दहनस्तृणकाष्ठसंचयैरपि तृप्येदुदधिर्नदीशतैः ।
न तु कामसुखैः पुमानहो बलवत्ता खलु काऽपि कर्म्मणः ।।

अपि च—किमपीदं विषयमयं विषमतिविषमं पुमानयं येन ।
प्रसभमनुभूयमानो भवे भवे नैव चेतयते ।।"

ननु तत्त्वविदोऽपि भोगानभुक्तवंतो न श्रूयंते इति **कामान् कः सेवते सुधीः** इत्युपदेशः कथं श्रद्धीयत इत्याह **कामं** इति । कामं अत्यर्थं । इदमत्र तात्पर्यं चारित्रमोहोदयात् भोगान् त्यक्तुमशक्नुवन्नपि तत्त्वज्ञो हेयरूपतया कामान्पश्यन्नेव सेवते, मंदीभवन्मोहोदयस्तु ज्ञान-वैराग्य-भावनया करणग्रामं संयम्य सहसा स्वकार्यायोत्सहत एव । तथा चोक्तम्—

'इदं फलमियं क्रिया करणमेतदेव क्रमो, व्ययोऽयमनुषंगजं फलमिदं दशयं मम ।
अयं सुहृदयं द्विषन् प्रयतिकालदेशाविमाविति प्रतिवितर्कयन् प्रयतते बुधो नेतरः ।।

किंच '**यदर्थमेतदेवंविधमिति** ।'—(स एव विध इति) भद्र ! यदर्थं यत्कायलक्षणं वस्तुसंतापाद्युपेतं उपकर्तुं कामस्त्वया प्रार्थ्यते एतद् एवं विधं वक्ष्यमाण लक्षणमित्यर्थः , स एवंविध इत्यपि पाठः । तद्यथा—

**भवंति प्राप्य यत्संगमशुचीनि शुचीन्यपि ।**
**स कायः संततापायस्तदर्थं प्रार्थना वृथा ।।१८।।**

टीका—वर्तते । कोऽसौ? स कायः शरीरं । किंविशिष्टः? संततापायः नित्य-क्षुधाद्युपतापः । स क, इत्याह—यत्संगं—येन कायेन सह संबंधं, प्राप्य लब्ध्वा शुचीन्यपि पवित्ररम्याण्यपि भोजनवस्त्रादिवस्तून्यशुचीनि भवंति । यतश्चैवं ततस्तदर्थं तं संततापायं, कायं शुचिवस्तुभिरुपकर्तुं प्रार्थना आकांक्षा तेषामेव वृथा-व्यर्था केनचिदुपायेन निवारितेऽपि एकस्मिन्नपाये क्षणे क्षणे पराऽपरापायो-पनिपातसम्भवात् ।।१८।।

'तर्हि धनादिनाप्यात्मोपकारो भविष्यतीति' तन्नेति पुनरप्याह शिष्यः ! भगवन् ! संततापायतया कायस्य धनादिना यद्युपकामो न स्यात्तर्हि धनादिनाऽपि न केवलमनशनादितपश्चरणेन इत्यपि शब्दार्थः। आत्मनो जीवस्योपकारोऽनुग्रहो भविष्यतीत्यर्थः। गुरुराह। यत्त्वया धनादिना आत्मोपकारभवनं संभाव्यते तन्न तन्नास्तीति। यतः—

**यज्जीवस्योपकाराय तद्देहस्याऽपकारकम्।**
**यद्देहस्योपकाराय तज्जीवस्यापकारकम् ॥१९॥**

टीका—यत् अनशनादितपोऽनुष्ठानं जीवस्य पूर्वापूर्वपापक्षपणनिवारणाभ्यां उपकाराय स्यात्तद्देहस्यापकारकं ग्लान्यादिनिमित्तत्वात्। यत्पुनर्धनादिकं देहस्य भोजनाद्युपयोगेन क्षुधाद्युपतापक्षयत्वादुपकाराय स्यात्तज्जीवस्योपार्ज्जनादौ पापजनकत्वेन दुर्गतिदुःखनिमित्तत्वादपकारकं स्यादतो जानीहि जीवस्य धनादिना नोपकारगंधोऽप्यस्ति धर्मस्यैव तदुपकारकत्वात्।

तर्हि कायस्योपकारश्चित्यते इति तन्नेति—अत्राह शिष्यः। भगवन् ! यद्येवं तर्हि 'शरीरमाद्यं खलु धर्मसाधनम्' इत्यभिधानात्तस्यापायनिरासाय यत्नः क्रियते न च कायस्यापायनिरासो दुष्कर इति वाच्यं। ध्यानेन तस्यापि सुकरत्वात्। तथा चोक्तम् [तत्त्वानुशासने]—

"यदात्रिकं फलं किंचित्फलमामुत्रिकं च यत्।
एतस्य द्वितयस्यापि ध्यानमेवाऽग्रकारणम्" ॥२१७॥

'झाणस्स ण दुल्लहं किंपि इति च—अत्र गुरुः प्रतिषेधमाह तन्न ध्यानेन कायस्योपकारो न चिंत्य इत्यर्थः। [यतः]

**इतश्चिन्तामणिर्दिव्य इतः पिण्याकखण्डकम्।**
**ध्यानेन चेदुभे लभ्ये क्वाऽऽद्रियन्तां विवेकिनः ॥२०॥**

टीका—अस्ति। कोऽसौ ? चिन्तामणिः—चिंतनार्थप्रदो रत्नविशेषः। किंविशिष्टः ? दिव्यो देवेनाधिष्ठितः। क्व इतः ? अस्मिन्नेकस्मिन् पक्षे

इतश्चान्यस्मिन् पक्षे पिण्याकखण्डक कुत्सितं अल्पं वा खलखंडकं अस्ति । एते च उभे द्वे अपि यदि ध्यानेन लभ्ये-अवश्यं लभ्ये, तर्हि कथय एव द्वयोर्मध्ये कतरस्मिन्नेकस्मिन् विवेकिनः लोभच्छेदविचारचतुरा आद्रियंतां आदरं कुर्वन्तु । तदैहिकफलाभिलापं त्यक्त्वा आमुत्रिकफलसिद्ध्यर्थमेवात्मा ध्यातव्यः । उक्तं च [तत्त्वानुशासने]—

"तद्ध्यानं रौद्रमार्त्तं वा यदैहिकफलार्थिनां ।
तस्मादेतत्परित्यज्य धर्म्यं शुक्लमुपास्यताम् ।।"२२०

स आत्मा कीदृश इति—अथैवमुद्बोधितश्रद्धानो विनेयः पृच्छति यो युष्माभिर्ध्यातिव्यतयोपदिष्टः पुमान् स किंस्वरूप इत्यर्थः । गुरुराह:—

**स्वसंवेदनसुव्यक्तस्तनुमात्रो निरत्ययः ।**
**अत्यंतसौख्यवानात्मा लोकालोकविलोकनः ।।२१।।**

टीका—अस्ति । कोऽसौ ? आत्मा । कीदृशः ? लोकालोकविलोकनः लोकोजीवाद्याकीर्णमाकाशं ततोऽन्यदलोकः तौ विशेषेण अशेषविशेषनिष्ठतया लोक्यते पश्यति जानाति इति [विलोकनः]। एतेन "ज्ञानशून्यं चैतन्यमात्रमात्मा" इति सांख्यमतं, बुद्ध्यादिगुणोज्झितः पुमानिति योगमतं च प्रत्युक्तं । प्रतिध्वस्तश्च नैरात्म्यवादो बौद्धानां । पुनः कीदृशः ? अत्यन्तसौख्यवान्-अनन्तसुखस्वभावः एतेन सांख्ययौगतन्त्रं प्रत्याहतं । पुनरपि कीदृशः? तनुमात्रः स्वोपात्तशरीरपरिमाणः इति । एतेन व्यापकं वटकणिकामात्रं चात्मानं वदंतौ प्रत्याख्यातौ । पुनरपि कीदृशः ? निरत्ययाः द्रव्यरूपतया नित्यः एतेन गर्भादिमरणपर्यन्तं जीवं प्रतिजानानश्चार्वाको निराकृतः ननु प्रमाणसिद्धे वस्तुन्येव गुणवादः श्रेयान्-नचात्मनस्तथा प्रमाणसिद्धत्वमस्तीत्यारेकायामाह । स्वसंवेदन–सुव्यक्तः इति । [उक्तं च तत्त्वानुशासने]—

"वेद्यत्वं वेदकत्वं च यत्स्वस्य स्वेन योगिनः ।
तत्स्वसंवेदनं प्राहुरात्मनोऽनुभवं दृशम् ।।१६१।।

इत्येवं लक्षणस्वसंवेदनप्रत्यक्षेण सकलप्रमाणधुर्येण सुव्यक्तः सु-सुष्ठु उक्तैश्च गुणैः संव्यक्तः इत्यपि पाठः संपूर्णतया व्यक्तः विशदतयानुभूतो योगिभिः स्वैकदेशेन ?।।२१।।

## यद्येवं, तस्योपास्तिः कथमिति ?

अत्राह शिष्यः—यद्येवमात्मास्ति तस्योपास्तिः कथमिति स्पष्टम् आत्मसेवोपायप्रश्नोऽयम् । गुरुराह—

**संयम्य करणग्राममेकाग्रत्वेन चेतसः ।**
**आत्मानमात्मवान्ध्यायेदात्मनैवात्मनि स्थितम् ॥२२॥**

टीका—ध्यायेत्—भावयेत्, कोऽसौ ? आत्मवान् गुप्तेंद्रियमनाध्यस्त ? स्वायत्तवृत्तिर्वा । कं ? आत्मानं यथोक्तस्वभावं पुरुषं । केन ? आत्मनैव स्वसंवेदनरूपेण स्वेनैव तज्ज्ञप्तौ करणांतराभावात् उक्तं च [तत्त्वानुशासने]—

"स्वपरज्ञप्तिरूपत्वात् न तस्य करणांतरम् ।
ततश्चिन्तां परित्यज्य स्वसंवित्त्यैव वेद्यताम् ॥१६२॥"

क्व तिष्ठंतं इत्याह—आत्मनि स्थितं वस्तुतः सर्वभावानां स्वरूप मात्राधारत्वात् । किं कृत्वा ? संयम्य-रूपादिभ्यो व्यावृत्य । किं ? करणग्रामं चक्षुरादींद्रियगणं । केनोपायेन ? एकाग्रत्वेन-एकं विवक्षितमात्मानं तं द्रव्यं पर्यायो वा अग्रं प्राधान्येनालंबनं विषयो यस्य [तत्] अथवा एकं पूर्वापरपर्यायाऽनुस्यूतं अग्रं आत्म ग्राह्य यस्य तदेकाग्रं तद्भावेन । कस्य? चेतसः मनसः । अयमर्थः यत्र क्वचिदात्मन्येव वा श्रुतज्ञानावष्टंभात् आलंबितेन मनसा । इन्द्रियाणि निरुद्ध्य स्वात्मानं च भावयित्वा तत्रैकाग्रतामासाद्य चिंतां त्यक्त्वा स्वसंवेदनेनैवात्मानमनुभवेत् । उक्तं च—

"गहियं तं सुयणाणा पच्छा संवेयणेण भाविज्जा ।
जो ण हु सुयमवलंबइ सो मुज्झइ अप्पसब्भावां ॥"

तथा च [समाधितंत्रे]—"प्रच्याव्य विषयेभ्योऽहं मां मयैव मयि स्थितं ।
बोधात्मानं प्रपन्नोऽस्मि परमानन्दनिर्वृतम् ॥३२॥"२२॥

आत्मोपासनया किमिति—अथाह शिष्यः—भगवन् आत्मोपासनया आत्मसेवनया किं प्रयोजनं स्यात् ? फलप्रतिपत्तिपूर्वकत्वात् प्रेक्षावत्प्रवृत्तेरिति पृष्टः सन् (गुरु)राचष्टे:—

**अज्ञानोपास्तिरज्ञानं ज्ञानं ज्ञानिसमाश्रयः ।**
**"ददाति यत्तु यस्यास्ति"–सुप्रसिद्धमिदं वचः ॥२३॥**

टीका—ददाति । काऽसौ, अज्ञानस्य देहादेर्मूढभ्रांतिः(न्तेः) संदिग्धगुर्वादेर्वा उपास्तिः सेवा किं ? अज्ञानं, मोहभ्रमसन्देहलक्षणं तथा ददाति । कोऽसौ ? ज्ञानिनः स्वभावस्यात्मनो ज्ञानसंपन्नगुर्वादेर्वा **समाश्रयः** । अनन्यपरतया सेवनं । किं ? ज्ञानं स्वार्थविबोधं । उक्तं च—

ज्ञानमेव फलं ज्ञाने ननु श्लाघ्यमनश्वरम् ।
अहो मोहस्य माहात्म्यमन्यदप्यत्र मृग्यते ॥

कोऽत्र दृष्टांतः ? इत्याह–यद् इत्यादि ददाति इत्यत्रापि योज्यं। 'तु अवधारेण' तेनायमर्थः संपद्यते । यदेव यस्य स्वाधीनं विद्यते स सेव्यमानस्तदेव ददातीतिएतद्वाक्यं लोके सुप्रतीतमतो भद्र ज्ञानिनमुपास्य समुल्लंभितस्वपरविवेकज्योतिरजस्रमात्मानमात्मनाऽऽत्मनि सेव्यश्च ॥२३॥

**ज्ञानिनः किं ? इति ।**

अत्राऽभ्याह शिष्यः । ज्ञानिनः अध्यात्मस्थस्य किं भवती इति निष्पन्नयोग्यपेक्षया स्वात्मध्यानफलप्रश्नोऽयम् । गुरुराह—

**परीषहाद्यविज्ञानादास्रवस्य निरोधिनी ।**
**जायतेऽध्यात्मयोगेन कर्मणामाशु निर्जरा ॥२४॥**

टीका—**जायते** भवति । काऽसौ ? **निर्ज्जरा**–एकदेशेन संक्षयो विश्लेषइत्यर्थः । केषां ? **कर्म्मणां** सिद्धयोग्यपेक्षयाऽशुभानां शुभानां च साध्ययोग्यपेक्षया त्वसद्वेद्यादीनां कथं ? **आशु**-सद्यः । केन ? **अध्यात्मयोगेन** आत्मन्यात्मनः प्राणिधानेन, किं केवला ? नेव इत्याह-**निरोधिनी**–प्रतिषेधयुक्ता कस्य ? आस्रवस्य आगमनस्य कर्मणामित्यत्रापि योज्यं कुत इत्याह [परिषहाद्यविज्ञानात्] परीषहाणां क्षुधादि दुःखभेदानां आदिशब्दाद्देवादिकृतोपसर्गबाधानां अविज्ञात् असंवेदनात्। तथा चोक्तम्—

'यस्य पुण्यं च पापं च निष्फलं गलति स्वयम् ।
स योगी तस्य निर्वाणं न तस्य पुनरास्रवः' ॥१॥

तथाच—[तत्त्वानुशासने]—

'तथाह्यचरमांगस्य ध्यानमभ्यस्तः सदा ।
निर्जरा संवरश्चास्य सकलाऽशुभकर्मणां ॥२२५॥

अपि च—[समाधितन्त्रे]—

आत्मदेहांतरज्ञानजनिताह्लादनिर्वृतः ।
तपसा दुष्कृतं घोरं भुंजानोऽपि न खिद्यते ॥३४॥

**सा खलु कर्म्मणो भवति तस्य सम्बन्धस्तदा कथमिति ।** (श्रूयतां)

टीका—एतच्च व्यवहारनयादुच्यते । कुत ? इत्याशंकायां पुनराचार्य एवाह । वत्स ! आकर्णय खलु यस्मात् सा एकदेशेन विश्लेपलक्षणा निर्ज्जरा कर्मणः चित्समान्यानुविधायिपुद्गलपरिणामरूपस्य द्रव्यकर्मण. सम्बन्धिनी संभवति द्रव्ययोरेव संयोगपूर्वविभागसंभवत् तस्य द्रव्यकर्मणस्तदा योगिनः स्वरूपमात्रावस्थानकाले सम्बन्धः प्रत्यासत्तिरात्मना सह । कथं ? केन संयोगादिप्रकारेण सम्भवति ? इति सूक्ष्मेक्षिकया समीक्षस्व न कथमपि सम्भवतीत्यर्थः । यदा खल्वात्मैव ध्यानं ध्येयं च स्यात्तदा सर्वात्मनाप्यात्मनः परद्रव्याद् व्यावृत्य स्वरूपमात्रावस्थितत्वात् कथं द्रव्यांतरेण संबंधः स्यात्तस्य द्विष्ठत्वात् । न चैतत् संसारिणो न संभवतीति वाच्यं । संसारतीरप्राप्तस्यायोगिनो मुक्तात्मवत्पंचह्रस्वस्वरोच्चारणकालं यावत्तथावस्थानसंभवात् कर्मक्षपणाभिमुखस्य (तत्)-लक्षणोत्कृष्टशुक्ललेश्यासंस्कारावेशवशात्तावन्मात्रकर्म्मपारतन्त्र्यव्यवहरणात् ।

तथाचोक्तम परमागमे—

"सीलेसिं संपत्तो णिरुद्धणिस्सेसआसवो जीवो ।
कम्मरयविप्पमुक्को गयजोगो केवली होदि ॥"

श्रूयतां चास्यैवाऽर्थस्य संग्रहश्लोकः—

**कटस्य कर्त्ताहमिति सम्बन्धः स्याद् द्वयोर्द्वयोः ।**
**ध्यानं ध्येयं यदात्मैव सम्बन्धः कीदृशस्तदा ॥२५॥**

टीका—स्यात् भवेत् । कोऽसौ ? सम्बन्धः द्रव्यादिना प्रत्यासत्तिः । कयोः ?

द्वयोर्द्वयोः कथंचिद्भिन्नयोः पदार्थयोः इति अनेन लोकप्रसिद्धेन प्रकारेण कथं-मिति यथाहमस्मि । कीदृशः, कर्ता निर्माता । कस्य ? कटस्य वंशदलानां जला-दिप्रतिबंधाद्यर्थस्य परिणामस्य । एवं संबंधस्य द्विष्ठतां प्रदर्श्य प्रकृतेर्व्यतिरेक-माह । ध्यानमित्यादि ध्यायते येन ध्यायति वा यस्तद्ध्यानं ध्याति क्रियां प्रति करणं कर्ता वा । उक्तं च; [तत्त्वानुशासने]—

'ध्यायते येन तद्ध्यानं यो ध्यायति स एव वा ६७ ॥'

ध्यायत इति ध्येयं (तच्च)ध्यातिक्रिययाऽऽप्यं । यदा यस्मिन् आत्मनः परमा-त्मना सहैकीकरणकाले आत्मैव चिन्मात्रमेव स्यात् तदा कीदृशः (संयोगादिप्रकारः संबंधो द्रव्यकर्मणा सहात्मनः स्यात् 'येन जायते) ऽध्यात्मयोगेन कर्म्मणामाशु निर्ज्जरेति' परमार्थतः कथ्यते ।

तर्हि कथं बंधस्तत्प्रतिपक्षश्चमोक्ष इति ?—अत्राह शिष्यः भगवन् ! यदि आत्मकर्मद्रव्योयरध्यात्मयोगेन विश्लेषः क्रियते तर्हि कथं केनोपायप्रकारेण तयोः बंधः परस्परप्रदेशानुप्रवेशलक्षणः संश्लेषः स्यात् । तत्पूर्वकत्वात् विश्लेषस्य, कथं च तत्प्रतिपक्षो बंधविरोधी मोक्षः सकलकर्मविश्लेषलक्षणो जीवस्य स्यात् तस्यैवा-नंतर१ सुखहेतुत्वेन योगिभिः प्रार्थनीयत्वात् । गुरुराह—

**बध्यते मुच्यते जीवः सममो निर्ममः क्रमात् ।**
**तस्मात्सर्वप्रयत्नेन निर्ममत्वं विचिंतयेत् ॥२६॥**

टीका—मम इत्यव्ययं ममेदं इत्यभिनिवेशार्थं अव्ययानां तेन अनेकार्थत्वात् सममो ममेदं इत्यभिनिवेशाविष्टो ऽहमस्येत्यभिनिवेशाविष्टश्चोपलक्षणत्वात् जीवः कर्मभिर्बध्यते । तथा चोक्तम्—

'न कर्मबहुलं जगन्न चलनात्मकं कर्म वा,
न चापि करणानि वा न चिदचिद्वधो बंधकृत् ।'
यदैक्यमुपयोगभूसमुपयातिरागादिभिः ।
स एव किल केवलं भवति बन्धहेतुर्नृणाम् ॥

तथा स एव जीवो निर्ममस्तद्विपरीतस्तैर्मुच्यत इति यथासंख्येन योजनार्थं क्रमादित्युपात्तं । उक्तं च [ज्ञानार्णवे]—

---

१. अनन्तर पाठः ।

तथाच—[तत्त्वानुशासने]—

'तथाह्यचरमांगस्य ध्यानमभ्यस्तः सदा।
निर्जरा संवरश्चास्य सकलाऽशुभकर्मणां ॥२२५॥

अपि च—[समाधितन्त्रे]—

आत्मदेहांतरज्ञानजनिताह्लादनिर्वृतः।
तपसा दुष्कृतं घोरं भुंजानोऽपि न खिद्यते ॥३४॥

**सा खलु कर्म्मणो भवति तस्य सम्बन्धस्तदा कथमिति।** (श्रूयतां)

टीका—एतच्च व्यवहारनयादुच्यते। कुत ? इत्याशंकायां पुनराचार्य एवाह। वत्स ! आकर्णय खलु यस्मात् सा एकदेशेन विश्लेषलक्षणा निर्ज्जरा कर्मणः चित्समान्यानुविधायिपुद्गलपरिणामरूपस्य द्रव्यकर्मणः सम्बन्धिनी संभवति द्रव्ययोरेव संयोगपूर्वविभागसंभवत् तस्य द्रव्यकर्मणस्तदा योगिनः स्वरूपमात्रावस्थानकाले सम्बन्धः प्रत्यासत्तिरात्मना सह। कथं ? केन संयोगादिप्रकारेण सम्भवति ? इति सूक्ष्मेक्षिकया समीक्षस्व न कथमपि सम्भवतीत्यर्थः। यदा खल्वात्मैव ध्यानं ध्येयं च स्यात्तदा सर्वात्मनाप्यात्मनः परद्रव्याद् व्यावृत्य स्वरूपमात्रावस्थितत्वात् कथं द्रव्यांतरेण संबंधः स्यात्तस्य द्विष्ठत्वात्। न चैतत् संसारिणो न संभवतीति वाच्यं। संसारतीरप्राप्तस्यायोगिनो मुक्तात्मवत्पंचह्रस्वस्वरोच्चारणकालं यावत्तथावस्थानसंभवात् कर्मक्षपणाभिमुखस्य (तत्)-लक्षणोत्कृष्टशुक्ललेश्यासंस्कारावेशवशात्तावन्मात्रकर्म्मपारतन्त्र्यव्यवहरणात्।

तथाचोक्तम् परमागमे—

"सीलेसिं संपत्तो णिरुद्धणिस्सेसआसवो जीवो।
कम्मरयविप्पमुक्को गयजोगो केवली होदि॥"

श्रूयतां चास्यैवाऽर्थस्य संग्रहश्लोकः—

**कटस्य कर्त्ताहमिति सम्बन्धः स्याद् द्वयोर्द्वयोः।**
**ध्यानं ध्येयं यदात्मैव सम्बन्धः कीदृशस्तदा ॥२५॥**

टीका—स्यात् भवेत्। कोऽसौ ? सम्बन्धः द्रव्यादिना प्रत्यासत्तिः। कयोः ?

द्वयोर्द्वयोः कथंचिद्भिन्नयोः पदार्थयोः इति अनेन लोकप्रसिद्धेन प्रकारेण कथंमिति यथाहमस्मि । कीदृशः, कर्ता निर्माता । कस्य ? कटस्य वंशदलानां जलादिप्रतिबंधाद्यर्थस्य परिणामस्य । एवं संबंधस्य द्दिष्ठतां प्रदर्श्य प्रकृतेर्व्यतिरेकमाह । ध्यानमित्यादि ध्यायते येन ध्यायति वा यस्तद्ध्यानं ध्याति क्रियां प्रति करणं कर्ता वा । उक्तं च; [तत्त्वानुशासने]—

'ध्यायते येन तद्ध्यानं यो ध्यायति स एव वा ६७ ॥'

ध्यायत इति ध्येयं (तच्च) ध्यातिक्रिययाऽऽप्यं । यदा यस्मिन् आत्मनः परमात्मना सहैकीकरणकाले आत्मैव चिन्मात्रमेव स्यात् तदा कीदृशः (संयोगादिप्रकारः संबंधो द्रव्यकर्मणा सहात्मनः स्यात् 'येन जायते) ऽध्यात्मयोगेन कर्म्मणामाशु निर्ज्जरेति' परमार्थतः कथ्यते ।

तर्हि कथं बंधस्तत्प्रतिपक्षश्चमोक्ष इति ?—अत्राह शिष्यः भगवन् ! यदि आत्मकर्मद्रव्योयरध्यात्मयोगेन विश्लेपः क्रियते तर्हि कथं केनोपायप्रकारेण तयोः बंधः परस्परप्रदेशानुप्रवेशलक्षणः संश्लेपः स्यात् । तत्पूर्वकत्वात् विश्लेपस्य, कथं च तत्प्रतिपक्षो बंधविरोधी मोक्षः सकलकर्मविश्लेपलक्षणो जीवस्य स्यात् तस्यैवानंतर१ सुखहेतुत्वेन योगिभिः प्रार्थनीयत्वात् । गुरुराह—

**बध्यते मुच्यते जीवः सममो निर्ममः क्रमात् ।**
**तस्मात्सर्वप्रयत्नेन निर्ममत्वं विचिंतयेत् ॥२६॥**

टीका—मम इत्यव्ययं ममेदं इत्यभिनिवेशार्थं अव्ययानां तेन अनेकार्थत्वात् सममो ममेदं इत्यभिनिवेशाविष्टो ऽहमस्येत्यभिनिवेशाविष्टश्चोपलक्षणत्वात् जीवः कर्मभिर्बध्यते । तथा चोक्तम्—

'न कर्मबहुलं जगन्न चलनात्मकं कर्म वा,
न चापि करणानि वा न चिदचिद्वधो बंधकृत् ।'
यदैक्यमुपयोगभूःसमुपयाति रागादिभिः ।
स एव किल केवलं भवति बन्धहेतुर्नृणाम् ॥

तथा स एव जीवो निर्ममस्तद्विपरीतस्तैर्मुच्यत इति यथासंख्येन योजनार्थं क्रमादित्युपात्तं । उक्तं च [ज्ञानार्णवे]—

१. अनन्तर पाठः ।

तर्ह्येतान्यासाद्य मुक्तानि पश्चात्तापकारीणि भविष्यंति इति तन्नेति—यद्युक्तरीत्या भयादयो मे न भवेयुस्तर्हि एतानि देहादि वस्तूनि आसाद्य जन्मप्रभृत्यात्मात्मीयभावेन प्रतिपद्य मुक्तानि इदानीं भेदभावनावष्टंभान्मया त्यक्तानि । चिराभ्यस्ताभेदसंस्कारवशात्पश्चात्तापकारीणि किमिति इमानि मया-ऽऽत्मीयानि त्यक्तानीति अनुशयकारीणि मम भविष्यंति ।

अत्र स्वयमेव प्रतिषेधमनुध्यायति तन्नेति यतः—

**भुक्तोज्झिता मुहुर्मोहान्मया सर्वेऽपि पुद्गलाः ।**
**उच्छिष्टेष्विव तेष्वद्य मम विज्ञस्य का स्पृहा ? ॥३०॥**

टीका—मोहात् अविद्यावेशवशात् अनादिकालं कर्मादिभावेनोपादाय, सर्वेऽपि पुद्गलाः मया संसारिणा जीवेन वारंवारं भुक्तोज्झिता पूर्वमनुभूताः पश्चाच्च नीरसीकृत्य त्यक्ता; यतश्चैवं तत उच्छिष्टेष्विव स्वयं भुक्त्वा त्यक्तेषु भोजन-गंधमाल्यादिषु यथा लोकस्य तथा मम मे संप्रति विज्ञस्य तत्त्वज्ञानपरिणतस्य तेषु फेलाकल्पेषु पुद्गलेषु का स्पृहा ? न काचिदपि । वत्स ! त्वया मोक्षार्थिना निर्ममत्वं विचिंतनीयम् ॥३०॥

अथ कथं ते निबध्यंत इति—अत्राह शिष्यः । अथेति प्रश्ने कथं केन प्रका-रेण ते पुद्गला जीवेन नियतमुपादीयन्त इत्यर्थः गुरुराह—

**कर्म कर्महिताऽऽबन्धि जीवो जीवहितस्पृहः ।**
**स्व-स्व-प्रभाव-भूयस्त्वे स्वार्थं को वा न वांछति ॥३१॥**

टीका—"कत्थवि वलिओ जीवो कत्थवि कम्माइं हुंति वलियाइं ।
जीवस्स य कम्मस्स य पुव्वविरुद्धाइं वइराइं ॥"

इत्यभिधानात् पूर्वोपार्जितं बलवत्कर्महिताऽऽबन्धि कर्मणः स्वस्यैव हितमा-बध्नाति जीवस्यौदयिकादिभावमुद्भाव्य नवनवकर्माधायकत्वेन स्वसंतानं पुष्णा-तीत्यर्थः । तथाचोक्तं [पुरुषार्थसिद्ध्युपाये]—

जीवकृतं परिणामं निमित्तमात्रं प्रपद्य पुनरन्ये ।
स्वयमेव परिणमन्तेऽत्र पुद्गलाः कर्मभावेन ॥१२॥
परिणममानस्य चिदश्चिदात्मकैः स्वयमपि स्वकैर्भावैः ।
भवति हि निमित्तमात्रं पौद्गलिकं कर्म तस्यापि ॥१३॥

तथा जीवः कालादिलब्ध्या बलवानात्मा जीवहितस्पृहः जीवस्यैव हितमनंत-सुखहेतुत्वेनोपकारकं मोक्षमाकांक्षति । अत्र दृष्टान्तमाह—स्वस्वप्रभावभूयस्त्वे निजनिजमाहात्म्यबहुतरत्वे सति स्वार्थं स्वस्योपकारकं वस्तु को वा न वांछति? सर्वोऽप्यभिलपतीत्यर्थः, ततो विद्धि कर्माविष्टो जीवः कर्मसंचिनोति इत्यर्थः ॥३२॥

यतश्चैवं ततः—

**परोपकार❀मृत्सृज्य स्वोपकारपरो भव ।**
**उपकुर्वन्परस्याज्ञो दृश्यमानस्य लोकवत् ॥३२॥**

टीका—**परोपकारं** परस्य कर्मणो देहादेर्वा अविद्यावशात् क्रियमाणमुपकारं **उत्सृज्य** विद्याभ्यासेन त्यक्त्वा **स्वोकारपरः** आत्मानुग्रहप्रधानो भव त्वम् । किं कुर्वन सन्? **उपकुर्वन्**! कस्य, परस्य सर्वथा स्वस्माद्बाह्यस्य दृश्यमानस्य इति इन्द्रियैरनुभूयमानस्य देहादेः । किं विशिष्टः यतस्त्वं अज्ञस्तत्त्वानभिज्ञः किंवत् लोकवत् । यथा लोकः परं परत्वेनाऽजानंत्तस्योपकुर्वन्नपि तं तत्त्वेन ज्ञात्वा तदुपकारं त्यक्त्वा स्वोपकारपरो भवति एवं त्वमपि भव इत्यर्थः ॥३२॥

अथाह शिष्यः,—**कथं तयोर्विशेष इति**—केनोपायेन तयो स्वपरयोः भेदः विशेषः विज्ञायते । तद्वि(द्वि) ज्ञातुश्च किं स्यादित्यर्थः । गुरुराह—

**गुरुपदेशादभ्यासात्संवित्तेः स्व-परांतरं ।**
**जानाति यः स जानाति मोक्षसौख्यं निरन्तरम् ॥३३॥**

टीका—यो **जानाति** । किं तत् **स्वपरांतरं** आत्म-परयोर्भेदं यः स्वात्मानं परस्माद्भिन्नं पश्यतीत्यर्थः । कुतः **संवित्तेः** लक्षणतः स्वलक्ष्यानुभवात् । एपोऽपि कुतः? **अभ्यासात्** अभ्यासभावनातः । एषोऽपि कुतः? **गुरूपदेशात्** धर्माचार्यस्यात्मनश्च सुदृढ-स्व-पर-विवेकज्ञानोत्पादकवाक्यात् स तथान्यापोढस्वात्मानुभविता **मोक्षसौख्यं निरन्तरम**विच्छिन्नमनुभवति । कर्मविविक्तानुभाव्यविनाभावित्वात्तस्य । तथाचोक्तं [तत्वानुशासने]—

'तमेवानुभवंश्चायमैकाग्र्यं परमृच्छति ।
तथात्माधीनमानंदमेति वाचामगोचरम् ॥१७०॥' इत्यादि

---

❀ परोपकृति इति पाठः ।

**कस्तत्र गुरुरिति**—अथ शिष्यः पृच्छति। तत्र मोक्षसुखानुभवविषये को गुरुरिति गुरुराह—

**स्वस्मिन्सदाभिलाषित्वादभीष्टज्ञापकत्वतः।**
**स्वयं हित [तं] प्रयोक्तृत्वादात्मैव गुरुरात्मनः ॥३४॥**

टीका—यः खलु शिष्यः **सदा अभीक्ष्णं** कल्याणमभिलषति तेन जिज्ञास्यमानं तदुपायं तं ज्ञापयति तत्र चाप्रवर्त्तमानं तं प्रवर्त्तयति स किल गुरुः प्रसिद्धः। एवं च सत्यात्मनः **आत्मैव** गुरुः स्यात्। कुत इत्याह—स्वयमात्मना **स्वस्मिन्**-मोक्षसुखाभिलाषिण्यात्मनि **सदाभिलाषित्वात्** सत् प्रशस्तं मोक्षसुखं सदाभिलाषित्वात् इति वा पाठः सदा अभीक्ष्णमभिलषति मोक्षसुखं मे संपद्यतामित्याकांक्षती त्येवंभ्रमात्। तथा अभीष्ट **ज्ञापकत्वतः**, अभीष्टस्यात्मना जिज्ञास्यमानस्य मोक्षसुखोपायस्यात्मविषये ज्ञापकत्वात् एष मोक्षसुखोपायो मया सेव्य इति बोधकत्वात्। तथा स्वयं प्रयोक्तृत्वात् हित मोक्षसुखोपाये स्वयं स्वस्य प्रयोक्तृत्वात्। अस्मिन् सुदुर्लभे मोक्षसुखोपाये दुरात्मन् आत्मन्! स्वयमद्यापि न प्रवृत्तः इति। तत्राप्रवर्तमानस्यात्मनः प्रवर्त्तकत्वात् ॥३४॥

**एवं नान्योपास्तिः प्राप्नोतीति—न चैव मेतदिति**। अथ शिष्यः साक्षेपमाह भगवन्नुक्तनी(री)त्या परस्परगुरुत्वे निश्चिते सति न धर्माचार्यादिसेवनं प्राप्नोति मुमुक्षुं इति। मुमुक्षुणा धर्माचार्यादिः सेव्यो न भवतीति भावः। **न चैवमेतादि**ति वाच्यमपसिद्धांत प्रसंगादिति वदन्तं प्रत्याह—

**नाऽज्ञो विज्ञत्वमायाति विज्ञो नाऽज्ञत्वमृच्छति।**
**निमित्तमात्रमन्यस्तु गतेर्धर्मास्तिकायवत् ॥३५॥**

टीका—भद्र! अज्ञः यः तत्त्वज्ञानोत्पत्त्ययोग्यो-भव्यादि[१] सविज्ञत्वं तत्त्वज्ञत्वं धर्माचार्याद्युपदेशसहस्रेणापि न गच्छति। तथा चोक्तम्—

'स्वाभाविकं हि निष्पत्तौ क्रिया गुणमपेक्ष्यते।
न व्यापारशतेनाऽपि शुकवत्पाठ्यते बकः॥

तथा विज्ञः तत्त्वज्ञानपरिणतः अज्ञत्वं तत्त्वज्ञानात्परिभ्रंशं न ऋच्छति अपाय[२] सहस्रेणापि न गच्छति। तथाचोक्तम्—[पद्मनंदि पंचविंशतिकायां]

---

१. 'अपेक्ष्येत' पाठः। २. उपाय इति पाठः।

'वज्रे पतत्यपि भयद्रुतविश्वलोके ,
मुक्ताध्वनि प्रशमिनो न चलंति योगात् ;
बोध - प्रदीप - हत - मोहमहांधकाराः ,
सम्यग्दृशः किमुत शेषपरीषहेषु ॥'

नन्वेवं बाह्यनिमित्तक्षेपः प्राप्नोतीत्यत्राह अन्यः पुनर्गुरुविपक्षादिः प्रकृतार्थसमुत्पादभ्रंशयोर्निमित्तमात्रं स्यात्तत्र योग्यताया एव साक्षात्साधकत्वात् ।

कस्याः को यथेत्यत्राह गते धर्माऽस्तिकाय कायवत इत्यादि । अयमर्थाः यथा युगपद्भाविगतिपरिणामोन्मुखानां भावानां स्वकीया गतिशक्तिरेव गतेः साक्षाज्जनिका तद्वैकल्ये तस्याः केनापि कर्त्तुमशक्यत्वात् । धर्मास्तिकायस्तु गत्युपग्राहकद्रव्यविशेषस्तस्याः सहकारिकारणमात्रं स्यात्, एवं प्रकृतेऽपि, अतो व्यवहारादेव गुर्वादेः शुश्रूषा प्रतिपत्तव्या ॥३५॥

**अभ्यासः कथमिति ?**—अथाह शिष्यः अभ्यासः कथ्यत इति क्वचित्पाठः अभ्यासप्रयोगोपायप्रश्नोऽयं । तत्राभ्यासः स्यात् भूयोभूयः प्रवृत्तिलक्षणत्वेन सुप्रसिद्धत्वात् । कथ्यते तस्य स्थाननियमादिरूपेणोपदेशः क्रियत इत्यर्थः । एवं संवित्तिरिति । उच्यते इति संवित्तिरुच्यत इत्युत्तरपातनिकाया अपि व्याख्यानमेतत्पाठापेक्षया द्रष्टव्यम् । तथा च—

गुरोरेवैते वाक्ये व्याख्येये—शिष्यबोधार्थं गुरुराह;—

**अभवच्चित्तविक्षेप एकांते तत्त्वसंस्थितिः ।**
**अभ्यस्येदभियोगेन योगी तत्त्वं निजात्मनः ॥३६॥**

टीका—अभ्यस्येत् भावयेत् कोसौ, ? योगी संयमी । किं ? तत्त्वं याथात्म्यं । कस्य ? निजात्मनः । केन ? अभियोगेन आलस्यनिद्रादिनिरासेन ? क्व ? एकांते योग्यशून्यगृहादौ । किं विशिष्टःसन् —? अभवन्नजायमानश्चित्तस्य मनसो विक्षेपो रागादिसंक्षोभो यस्य सोऽयं इत्थंभूतः सन् । किंभूतो भूत्वा ? तथाभूतः इत्याह । तत्त्वसंस्थितः तत्त्वे हेये उपादेये च संस्थितः गुरुपदेशान्निश्चलधीः यदि वा तत्त्वेन साध्ये वस्तुनि सम्यक् स्थितो यथोक्तकायोत्सर्गादिना व्यवस्थितः ॥३६॥

संवित्तिरिति ! उच्यते इति ।

अभ्यासः कथमित्यनुवर्त्य नायमर्थः ते संयम्यते ?-अथाह शिष्यः भगवन् ! उक्तलक्षणासंवित्तिः प्रवर्तमाना कथं—केनोपायेन योगिनो विज्ञायते कथं च प्रतिक्षणं प्रकर्षमापद्यते ? अत्राचार्यो वक्ति । धीमन् आकर्णय उच्यते वर्ण्यते तल्लिंगं तावन्मया इत्यर्थः ।

यथा यथा समायाति संवित्तौ तत्त्वमुत्तमम् ।
तथा तथा न रोचन्ते विषयाः सुलभा अपि ॥३७॥

टीका—येन येन प्रकारेण संवित्तौ उत्तमं विशुद्धमात्मस्वरूपं समायाति सांमुख्येनाऽऽगच्छति योगिनः तथा तथा [तेन तेन प्रकारेण] सुलभा अपि अनायासलभ्या अपि विषया रम्येंद्रियार्था न रोचन्ते तत्त्वं भोग्यबुद्धिं नोत्पादयन्ति । महासुखलब्धावल्पसुखकारणाना लोकेऽप्यनादरणीयत्वदर्शनात् । तथाचोक्तम्—

"शमसुखशीलितमनसामशनमपि द्वेषमेति किमु कामाः ।
स्थलमपि दहति झषाणां किमङ्ग पुनरङ्गमङ्गारः ॥१॥"

अतो विषयारुचिरेव योगिनः स्वात्मसंवित्तेर्गमिका तदभावे तदभावात् प्रकृष्यमाणायां च विषयारुचौ स्वात्मसंवित्तिः प्रकृष्यते । तद्यथा—

यथा यथा न रोचंते विषयाः सुलभा अपि ।
तथा तथा समायाति संवित्तौ तत्त्वमुत्तमम् ॥३८॥

टीका—अत्रापि पूर्ववद् व्याख्यानम् तथा चोक्तम् [समयसारकलशायां]—

"विरम किमपरेणाकार्यकोलाहलेन,
स्वयमपि निभृतः सन्पश्य षण्मासमेकं ।

गच्छति ततोऽन्यत्र न याति इति न प्रसिद्धं प्रतीतं। अतः प्रतीहि योगिनोऽध्यात्मं निवसतोऽननुभूताऽपूर्वानंदाऽनुभवादन्यत्र वृत्त्यभावः स्यादिति ॥४३॥

अन्यत्राऽप्रवर्त्तमानश्चेदृक् स्यात्—

**अगच्छंस्तद्विशेषाणामनभिज्ञश्च जायते ।**
**अज्ञाततद्विशेषस्तु बद्धयेते न विमुच्यते ॥४४॥**

टीका—स्वात्मतत्त्वनिष्ठोऽन्यत्र अगच्छन् अप्रवर्तमानः तद्विषेणां तस्य स्वात्मनोऽन्यस्य देहादेर्विशेषाणां सौंदर्यासौंदर्यादिधर्माणां अनभिज्ञश्च आभिमुख्येनाऽप्रतिपत्ता च जायते-भवति। तु पुनः अज्ञाततद्विशेषः तत्राऽजा(ज्ञा)यमानरागद्वेषत्वात् कर्मभिः न बध्यते। किं तर्हि विमुच्यते विशेषेण व्रताद्यनुष्ठातृभ्योऽतिरेकेण तैर्मुच्यते ॥४४॥

किं च—

**परः परस्ततो दुःखमात्मैवात्मा ततः सुखम् ।**
**अतएव महात्मानस्तन्निमित्तं कृतोद्यमाः ॥४५॥**

टीका—परो देहादिरर्थः पर एव, कथंचिदपि तस्याऽऽत्मीकर्त्तुमशक्यत्वात् यतश्चैवं ततस्तस्मादात्मन्यारोप्यमाणाद् दुःखमेव स्यात् तद्वारत्वाद् दुःख-निमित्तानां प्रवृत्तेः। तथा आत्मा आत्मैव स्यात् तस्य कदाचिदपि देहादिरूपत्वाऽनुपादानात्। यतश्चैवं ततः तस्मात् सुखं स्यादुःखनिमित्तनां तस्याविषयत्वात्। यतश्चैवं, अतएव महात्मानस्तीर्थंकरादयः तन्निमित्तं आत्मार्थं कृतोद्यमाः विहित-तपानुष्ठानाभियोगाः सञ्जाताः।

अथ परद्रव्यानुरागे दोषं दर्शयति :—

**अविद्वान्पुद्गलद्रव्यं योऽभिनन्दति तस्य तत् ।**
**न जातु जन्तोः सामीप्यं चतुर्गतिषु मुञ्चति ॥४६॥**

टीका—यः पुनरविद्वान् हेयोपादेयतत्त्वानभिज्ञः पुद्गलद्रव्यं देहादिकमभिनंदति श्रद्धत्ते आत्मात्मीयभावेन प्रतिपद्यते तस्य जन्तोः जीवस्य तत् पुद्गलद्रव्यं चतुर्गतिषु चतसृषु नारकादिगतिषु सामीप्यं प्रत्यासत्तिं संयोगसंबंधं जातु कदाचिदपि न मुञ्चति त्यजति ॥४६॥

किं स्वरूप परस्य किं भवति ?

अथाह शिष्यः स्वरूपपरस्य किं भवतीति—सुगमम् गुरुराह—

आत्मानुष्ठाननिष्ठस्य व्यवहारबहिः स्थितेः ।
जायते परमानन्दः कश्चिद् योगेन योगिनः ॥४७॥

टीका—आत्मानुष्ठाननिष्ठस्य आत्मनोऽनुष्ठानं देहादेव्यावर्त्य स्वात्मन्येवावस्थापनं तत्र निष्ठस्य तत्परस्य व्यवहारबहिःस्थितेः व्यवहारात्प्रवृत्तिनिवृत्तिलक्षणाद्वहिःस्थितेः वाह्यस्य योगिनः ध्यातुर्योगेन स्वात्मध्यानेन हेतुना कश्चिद् वाचामगोचरः परमानन्दः परमोऽनन्यसंभवी आनन्दः उत्पद्यते ॥४७॥

तत्कार्यमुच्यते—

आनन्दो निर्दहत्युद्धं कर्मेन्धन[१]मनारतम् ।
न चाऽसौ खिद्यते योगी वहिर्दुःखेष्वचेतनः ॥४८॥

टीका—स पुनरानन्दः उद्धं प्रभूतं कर्मेन्धनं अनारतं सन्ततं (कर्मसंततिं) निर्दहति । वह्निरिंधनं यथा । किं च असौ आनन्दाविष्टो योगी वहिर्दुःखेषु परीषहोपसर्गक्लेशेषु अचेतनः असंवेदनः स्यात् तत एव न खिद्यते न संक्लेशं याति ।४८

यस्मादेवं तस्मात्—

अविद्याभिदुरं ज्योतिः परं ज्ञानमयं महत् ।
तत्प्रष्टव्यं तदेष्टव्यं तद्द्रष्टव्यं मुमुक्षुभिः ॥४९॥

टीका—तत् आनंदस्वभावं ज्ञानमयं स्वार्थविभासात्मकं परं उत्कृष्टं अविद्याभिदुरं विभ्रमच्छेदकं महत् विपुलं इन्द्रादीनां पूज्यं वा ज्योतिः प्रष्टव्यंमुमुक्षुभिःर्गुर्वादिभ्योऽनुयोक्तव्यं । तथा तदेव एष्टव्यं अभिलषणीयं, तदेव च द्रष्टव्यमनुभवनीयं ॥४९॥

किं वहुनेति ?

---

१. कर्मेन्धनमनारतं सन्ततं इत्यस्य स्थाने कर्म सन्तति इत्येव पाठः मु० ।

एवं व्युत्पाद्यं विस्तरतो व्युत्पाद्य उक्तार्थतत्त्वं परमकरुणया संगृह्य तन्मनसि संस्थापयितुकामः सूरिरिदमाह—

हे सुमते ! किं कार्यं बहुनोक्तेन हेयोपादेयतत्त्वयो संक्षेपेणापि प्राज्ञचेतसि निवेषयितुं शक्यत्वात् इति भावः ।

**जीवोऽन्यः पुद्गलश्चान्य इत्यसौ तत्त्वसङ्ग्रहः ।**
**यदन्यदुच्यते किञ्चित्सोऽस्तु तस्यैव विस्तरः ॥५०॥**

टीका—जीवो अन्यः देहादेर्भिन्नः पुद्गलश्च देहादिश्च अन्यः जीवाद्भिन्नः इति इत्यानेव असौ विधीयते तत्त्व संग्रहः आत्मनस्तत्त्वस्य भूतार्थस्य संग्रहः सामस्त्येन ग्रहणं निर्णयः स्यात् । यतः पुनः इतस्तत्त्वसंग्रहात् अन्यत् अतिरिक्त किंचित् तद्भेदप्रभेदादिकं विस्तररुचिशिष्यापेक्षयाऽऽचार्यैः उच्यते । स तस्यैव विस्तरो व्यासः अस्तु तमपि वयमभिनंदाम इति भावः ॥५०॥

आचार्यः शास्त्राध्ययनस्य साक्षात्पारम्पर्येण च फलं प्रतिपादयति :—

**इष्टोपदेशमिति सम्यगधीत्य धीमान्,**
**मानापमानसमतां स्वमताद् वितन्य ।**
**मुक्ताग्रहो विनिवसन्सजने वने वा।**
**मुक्तिश्रियं निरुपमामुपयाति भव्यः ॥५१॥**

टीका—इत्यनेन प्रकारेण इष्टोपदेशं, इष्टं सुखं तत्कारणत्वान्मोक्षस्तदुपायत्वाच्च स्वात्मध्यानं उपदिश्यते-यथावत्प्रतिपाद्यते अनेनास्मिन्निति वा 'इष्टोपदेशो' नाम ग्रन्थस्तं सम्यग् व्यवहारनिश्चयाभ्यां अधीत्य पठित्वा चिंतयित्वा च धीमान् हिताहितपरीक्षादक्षो भव्योऽनन्तज्ञानाद्याविर्भावयोग्यो जीव मुक्तिश्रियं अनंतज्ञानादिसम्पदं निरुपमां अनौपम्यां [उपयाति] प्राप्नोति । किं कुर्वन् ? मुक्ताग्रहः वर्जितबहिरर्थाभिनिवेशः सन् सजने ग्रामादौ वने ऽरण्ये वा विनिवसन् विधिपूर्वकं तिष्ठन् । किं कृत्वा ? वितन्य विशेषेण विस्तार्य । का ? मानोऽपमानसमतां माने महत्वाधाने अपमाने च महत्वखण्डने समतां रागद्वेषयोरभावं । कस्माद्धेतोः ? स्वमतात् इष्टोपदेशाध्ययनचिंतनजनितात् आत्मज्ञानात् । उक्तं च [समाधितन्त्रे]—

"यदा मोहात्प्रजायेते राग-द्वेषौ तपस्विनः ।
तदैव भावयेत्स्वस्थमात्मानं साम्यतः क्षणात् ॥" इति श्रयः ।

[इति इष्टोपदेश टीका]

## टीका कर्तुः प्रशस्तिः

विनेयेन्दुमुनेर्वाक्याद्भव्यानुग्रहहेतुना ।
इष्टोपदेशटीकेयं कृताशाधरधीमता ॥१॥

उपशम इव मूर्तः सागरेन्दोर्मुनीन्द्रा,
दजनि विनयचंद्रः सच्चकोरैकचन्द्रः ।
जगदमृतसगर्भाः शास्त्रसंदर्भगर्भाः,
शुचिचरित-वरिष्णोर्यस्य धिन्वन्ति वाचः ॥२॥

जयंति जगतीवन्द्या श्रीमन्नेमिजिनाङ्घ्रयः ।
रेणवोऽपि शिरोराज्ञामारोहंति यदाश्रिताः ॥३॥

इति श्रीपूज्यपादस्वामिविरचितः इष्टोपदेशः समाप्ताः ॥

---

## इष्टोपदेशपद्यानुक्रम-सूची

—:o:—

# वीर-शासन-संघ के प्रकाशन

(२१) जैन साहित्य और इतिहास पर विशद प्रकाश, पृष्ठ संख्या ७४० मूल्य सजिल्द ... ... ...५)

(२२) कसायपाहुड सुत्त—मूलग्रन्थ की रचना आज से दो हजार वर्ष पूर्व श्री गुणधराचार्य ने की, जिस पर श्री यतिवृषभाचार्य ने पन्द्रह सौ वर्ष पूर्व छह हजार श्लोक प्रमाण चूर्णिसूत्र लिखे। सम्पादक पं० हीरालाल जी सिद्धान्त शास्त्री, उपयोगी परिशिष्टों और हिन्दी अनुवाद के साथ बड़ी साइज के १००० से भी अधिक पृष्ठों में। पुष्ट कागज और कपड़े की पक्की जिल्द। ... ... २०)

(२३) Reality आ० पूज्यपाद की सर्वार्थसिद्धि का अंग्रेजी में अनुवाद बड़े आकार के ३०० पृष्ठ पक्की जिल्द मू० ... ६)

व्यवस्थापक
वीर सेवा मन्दिर
२१, दरियागंज, दिल्ली-६